भारतार्य संस्कृत प्रेममण्डली आनन्द कुसुममाला सीरीस् ४४

श्रीः

चम्पुरामायणे

# सुन्दरकाण्डे सारसंग्रहः

संपादकः

रामदास श्रीकृष्णजयन्ती गोसाई

बेङ्गळूर नगरे

"बेङ्गळूरु प्रेस्" आख्य मुद्रणालये संमुद्रितः

१९५३

Price 0-3-0

हरिः ॐ

## श्री भोजराजसार्वभौमविरचिते चम्पुरामायणे
## सुन्दरकाण्डे सारसंग्रहः ॥

ततो हनूमान्दशकण्ठनीतां सीतां विचेतुं पथि चारणानाम् ।
महेन्द्रशैलस्य खगेन्द्रवेगः प्रस्थादुदस्थात्प्रथमानवेगः ॥ १ ॥

तत्र यात्राप्रत्यूहः प्रत्युद्भूत इति वक्षसा तमचः पातयित्वा प्रयान्तमेनं सान्त्वयन्हिरेण्यनाभो बभाषे ॥ ग. १ ॥

सागरेण कृतज्ञेन तत्राध्वश्रान्तिशान्तये ।
मारुते प्रेरितोऽस्म्यद्य सौम्य विश्रम्य गम्यताम् ॥ २ ॥
त्वत्पित्राहं परित्रातः पूर्वं पर्वतभेदिनः ।
तस्मान्नास्मि विपक्षोऽद्य सपक्ष इति मां भज ॥ ३ ॥

एवं प्रार्थयमानमेनं संमान्य कार्यगत्या गते सति हनूमति ॥ ग. २ ॥

तदनु यथापुरं लङ्कापुरं प्रति प्रधावतो हनूमतः सरणिमरुणदरुणसारथेः पदवीं विन्ध्य इव वदनं व्यादाय द्विरसनजननी रंहसा सुरसा ॥ ग. ३ ॥

तनुं तनूकृत्य तदा हनूमान्कृत्वा प्रवेशं जठरे तदीये ।
ततो विनिष्क्रम्य स शक्रपाणेस्त्रिविक्रमस्य क्रममेव चक्रे ॥ ४ ॥

तदनु पारावारस्य पारे लम्बशिखरिणि लम्बमानः प्रतनुतरवपुर्लङ्कापुरोत्तरगोपुरद्वारमासाद्य नितान्तचिन्तातन्तुसंतानितान्तःकरणोऽभूत् ॥ ग. ४ ॥

तस्मिन्प्रदोषसमये सहसा हनूमान्कीर्तिच्छटाजवनिकामपनीयशत्रोः ।
आविर्बभूव सुमनःपरितोषणाय लङ्काप्रवेशनवनाटकसूत्रधारः ॥ ५ ॥

असौ जनकनन्दिनीं ततइतो विचिन्वन्क्षणाद
शोकवनिकामगादपगतान्यमार्गभ्रमः ।
परामभिलषन्गार्ति शमधनो यथा निर्ममस्त्रयी-
मखिलकिल्बिषप्रशमनैक दिव्यौषधिम् ॥ ६ ॥

पुनरयमेनामालोक्यैवं चिन्तां ततान ॥ ग. ५ ॥

ज्योत्स्नां विनापि निवसेन्निशि शीतभानु-
श्छायां विनापि विलसेद्दिवसेश्वरोऽपि ।
एनां विना रघुपतिः परिगृह्य धैर्यं
सप्राण एव वसतीति विचित्रमेतत् ॥ ७ ॥

एतद्दर्शनेन वेपमानतनुलता मैथिली कापुरुषविषयपरुष-वचनपारम्पर्येण विदीर्यमाणहृदया हृदयदयिताशयप्रत्ययादमुमेव-तृणमन्तरतः कृत्वा स्थिता पर्यभाषत ॥ ग. ६ ॥

अयि, सकलसमाचारप्रतिष्ठानिष्टः परमेष्ठी ननु कुलगुरु-र्भवतः । परकलत्ररतिरपत्रपां जनयति हि गोत्रजातानाम् ॥ ग. ७ ॥

भूयोपि पञ्चवटीपरिसरममुं जनमनुकूलप्रभञ्जन इवानुकूलः कूलोपकण्ठं परिभ्रष्टां नावमिव यदि नयेथाः, तर्हि तवापि दयते नियतं मदीयो जीवितेशः साक्षाज्जीवितेशोऽपि त्वयि दयालुर्भवेत् ॥ ग. ८ ॥

दाशरथेरजय्याया मैत्र्याः पात्रमपि भवितासि ॥ ग. ९ ॥

एवं जनकदुहितुरवधीरणाफणितिमाकर्ण्य कोपपराङ्मुखो दशमुखस्तामभितो निवसन्तीरारक्षिकराक्षसीरुद्दिश्य "भवत्यः चतुर्भिरप्युपायैरेनामवश्यं वश्यां कुरुध्वम् । इयमननुकूला चेदिमां हताशां प्रातरशनाय महानसं नयत" इत्यादिश्य निशान्ते

प्रत्यासन्ने निशान्तमेव प्रविवेश ॥ ग. १० ॥

नूनं विदितवृत्तान्ते जटायुषि गतायुषि ।
मामिहस्थामार्यपुत्रः किं नाधिगतवान्प्रभुः ॥ ८ ॥

अहोस्वित्क्रव्यादमायया विपर्यस्तत्रकृतेः काकुत्स्थस्य किम्वनास्था संजायते ॥ ग. ११ ॥

अथवा। न केवलं मामहरद्दुरात्मा कृपां च रामस्य निसर्गसिद्धाम् ।
इदं न चेत्संश्रितवत्सलः किं भवेत्स तूष्णीं जगदेकवीरः ॥ ९ ॥

इत्थं विलप्य रघुपुंगवमेव संततं चिन्तयन्ती कृच्छ्रान्मूर्च्छामगमत् ॥ ग. १२ ॥

निशाचरीस्तां निरवद्यशीलां निर्भर्त्सयन्तीर्निभृतं निवार्य ।
अस्वप्नलोकोत्सवमात्मदृष्टं दुःस्वप्नमेकं त्रिजटा जगाद ॥ १० ॥

तदनन्तरमात्मत्यागाय स्पृहयन्त्यां मैथिल्यां मारुतिरियमनुपेक्षणीया तपस्विनी नीतिमसुञ्चतीति चिन्तां परिगृह्य नेदीयानस्या बभूव। ततः ॥ ग. १३ ॥

देव्या दशाननवचोमयवज्रदीर्णकर्णान्तरव्रणविरोपणभेषजानि ।
विस्रम्भणार्थमयथान्वयसंगतानि रामाभिकीर्तनमधूनि शनैर्न्यषिञ्चत्
॥ ११ ॥

तदनन्तरं समन्तात्प्रसारितनयना जनकतनया तस्यां शाखायां शाखामृगमुद्वीक्ष्य दुःस्वप्नबुद्ध्या चकितहृदया सलक्ष्मणाय रामाय भर्त्रे भद्रमाशंसमाना जनमिमं दुरापस्वापं स्वप्नः कथमाप्नुयादिति विचिन्त्य मायया समायातनैऋतपतिबुध्द्या तस्मान्मारुत पुत्रात्तत्रास ॥ ग. १४ ॥

सोऽपि समवतीर्य वचनवैचित्र्याज्जनकपुत्रीं प्रत्याययितु-

माञ्जनेयः कृताञ्जलिर्व्यजिज्ञपत् ॥ ग. १५ ॥

कल्याणि त्वद्वियोगेन तीव्रवेगेन ताम्यतः ।
राघवेन्द्रस्य दूतं मामन्यथा मा स्म मन्यथाः ॥ १२ ॥

त्वया सह प्रस्थितचित्तवृत्तिर्विभावरीकोकसमानधर्मा ।
वचोऽब्रवीन्मैथिलि मन्मुखेन त्वां कौशलं कोसलराजपुत्रः ॥ १३ ॥

शिरसा तव सौमित्रिरकरोदभिवादनम् ।
अपृच्छत्सोऽपि भद्रं त्वामधिपश्च वनौकसाम् ॥ १४ ॥

एवमभिहितया तया संभूतविस्रम्भतया भयादपेतया तावदनुयुक्तः पवनतनयो वालिमरणकारणं सुग्रीवस्य सख्यमाख्याय प्राचेतसचेत इव संततसंनिहितरामनाममङ्गलमङ्गुलीयकमस्यै प्रायच्छत् ॥ ग. १६ ॥

सौख्यावहस्य पवनात्मजनीयमान रामाङ्गुलीयकविलोकनवासरस्य ।
सत्यं कलां शततमीं भुविनैव भेजे पाणिग्रहोत्सवदिनं जनकात्मजायाः
॥ १५ ॥

ततस्तं जानकी निःसीमहर्षा बभाषे । महाभाग सर्वथास्य दुरात्मनः प्रत्यासीदति मृत्युरेव मनलाभिधानया विभीषणदुहित्रा स्वमात्रा प्रेषितया भाषितं च । अयमप्यनार्यशीलस्तुरीयमुपायमन्तरेण न मामार्यपुत्रस्य समर्पयिष्यति । नियतमहमपि मासादूर्ध्वं न शक्नुयां प्राणान्कृपणान्धारयितुमिति ॥ ग. १७ ॥

एतदाकर्ण्य मारुतिः "महानुभावे मा भैषीः । भवतीं वहन्नेव तूर्णमुल्लङ्घितसागरो रघुवरचरणसरसिजसमीपमुपयास्यामि । मामसमर्थं न समर्थयेथा" इत्यभिहितवान् ॥ ग. १८ ॥

महामहीध्रसध्रीचीं सोऽयं बुद्धिमुपेयिवान् ।

यया नूनमपांराशिः कुल्यातुल्यां दशां दधौ ॥ १६ ॥
अथ तमुवाच सा जनकराजसुता मुदिता
किमु तव दुष्करं चरणलङ्घितवारिनिधेः ।
अपि तु मया सह प्लवगपुंगव यास्यसि
चेन्नियतमपायिनी परिणमेद्भवतः पदवी ॥ १७ ॥

सैषा परिचितकथास्मरणाद्विगुणितदुर्दशा-
केशपिनद्धमपरमिदमभिज्ञानमुन्मुच्य—

चूडामणिं कपिवरस्य ददौ दशास्य संत्रासपुञ्जितरुषाग्निदशं कृशाङ्गी । आदाय तत्प्रणतिपूर्वमसौ प्रतस्थे माणिक्यगर्भवदनो-रगतुल्यबाहुः ॥ १८ ॥

ततः कृतकृत्य एव निर्गत्य निजागमनं निशाचरपतेः प्रकाशयितुमशोकवनिकां प्रबभञ्ज प्रभञ्जनात्मजः ॥ ग. १९ ॥

ततः प्रहस्तेन विहितविविधानुयोगः प्रत्यभाषत रावणं मारुतिः ॥ ग. २० ॥

एवं निशम्य कुपितः पिशिताशनेन्द्रः
प्राणानमुष्य हरतेति भटानवदीत् ।
अजान्मशुद्धमतिरत्र विभीषणस्तं दूतो न
वध्य इति शास्त्रगिरा रुरोध ॥ १९ ॥

रावणोऽपि विभीषणभाषणमङ्गीकृत्य "प्लवङ्गानामङ्गेषु लाङ्गूलमेव वरम् । तदेव कार्पासवाससा संवीतं वह्निसात्कृत्य चत्वरे चत्वरे घोषानुद्धोष्य सप्रहारं नगरं परितः संचारयत" इति राक्षसानादिदेश । तेषु तथा कुर्वाणेषु ॥ ग. २१ ॥

निर्णयाविषयमस्य बालतः कर्णिकारनिकुरुम्बकर्बुरः ।

माञ्जनेयः कृताञ्जलिर्व्यजिज्ञपत् ॥ ग. १५ ॥

कल्याणि त्वद्वियोगेन तीव्रवेगेन ताम्यतः ।
राघवेन्द्रस्य दूतं मामन्यथा मा स्म मन्यथाः ॥ १२ ॥

त्वया सह प्रस्थितचित्तवृत्तिर्विभावरीकोकसमानधर्मा ।
वचोऽब्रवीन्मैथिलि मन्मुखेन त्वां कौशलं कोसलराजपुत्रः ॥ १३ ॥

शिरसा तव सौमित्रिरकरोदभिवादनम् ।
अपृच्छत्सोऽपि भद्रं त्वामधिपश्च वनौकसाम् ॥ १४ ॥

एवमभिहितया तया संभूतविस्रम्भतया भयादपेतया तावदनुयुक्तः पवनतनयो वालिमरणकारणं सुग्रीवस्य सख्यमाख्याय प्राचेतसचेत इव संततसंनिहितरामनाममङ्गलमङ्गुलीयकमस्यै प्रायच्छत् ॥ ग. १६ ॥

सौख्यावहस्य पवनात्मजनीयमान रामाङ्गुलीयकविलोकनवासरस्य ।
सत्यं कलां शततमीं भुविनैव भेजे पाणिग्रहोत्सवदिनं जनकात्मजायाः ॥ १५ ॥

ततस्तं जानकी निःसीमहर्षा बभाषे । महाभाग सर्वथास्य दुरात्मनः प्रत्यासीदति मृत्युरेव मनलाभिधानया विभीषणदुहित्रा स्वमात्रा प्रेषितया भाषितं च । अयमप्यनार्यशीलस्तुरीयमुपायमन्तरेण न मामार्यपुत्रस्य समर्पयिष्यति । नियतमहमपि मासादूर्ध्वं न शक्नुयां प्राणान्कृपणान्धारयितुमिति ॥ ग. १७ ॥

एतदाकर्ण्य मारुतिः "महानुभावे मा भैषीः । भवतीं वहन्नेव तूर्णमुल्लङ्घितसागरो रघुवरचरणसरसिजसमीपमुपयास्यामि । मामसमर्थं न समर्थयेथा" इत्यभिहितवान् ॥ ग. १८ ॥

महामहीध्रसध्रीचीं सोऽयं बुद्धिमुपेयिवान् ।

यया नूनमपांराशिः कुल्यातुल्यां दशां दधौ ॥ १६ ॥

अथ तमुवाच सा जनकराजसुता मुदिता
किमु तव दुष्करं चरणलङ्घितवारिनिधेः ।
अपि तु मया सह प्लवगपुंगव यास्यसि
चेन्नियतमपायिनीं परिणमेद्भवतः पदवी ॥ १७ ॥

सैषा परिचितकथास्मरणाद्द्विगुणितदुर्दशा-
केशपिनद्धमपरमिदमभिज्ञानमुन्मुच्य—

चूडामणिं कपिवरस्य ददौ दशास्य संत्रासपुञ्जितरुषाग्निदशं कृशाङ्गी । आदाय तत्प्रणतिपूर्वमसौ प्रतस्थे माणिक्यगर्भवदनोरगतुल्यबाहुः ॥ १८ ॥

ततः कृतकृत्य एव निर्गत्य निजागमनं निशाचरपतेः प्रकाशयितुमशोकवनिकां प्रबभञ्ज प्रभञ्जनात्मजः ॥ ग. १९ ॥

ततः प्रहस्तेन विहितविविधानुयोगः प्रत्यभाषत रावणं मारुतिः ॥ ग. २० ॥

एवं निशम्य कुपितः पिशिताशनेन्द्रः
प्राणानमुष्य हरतेति भटानवदीत् ।
अजान्मशुद्धमतिरत्र विभीषणस्तं दूतो न
वध्य इति शास्त्रगिरा रुरोध ॥ १९ ॥

रावणोऽपि विभीषणभाषणमङ्गीकृत्य "प्लवङ्गानामङ्गेषु लाङ्गूलमेव वरम् । तदेव कार्पासवाससा संवीतं वह्निसात्कृत्य चत्वरे चत्वरे घोषानुद्घोष्य सप्रहारं नगरं परितः संचारयत" इति राक्षसानादिदेश । तेषु तथा कुर्वाणेषु ॥ ग. २१ ॥

निर्णयाविषयमस्य बालतः कर्णिकारनिकुरुम्बकर्बुरः ।

निर्निमेषगणभाग्यसंचयादुन्मिमेष भगवानुषर्बुधः ॥ २० ॥

एतद्वृत्तान्तमारक्षिकराक्षसीगणगर्वोदीर्णवर्णितमाकर्ण्य दूयमानमानसा जानकी हुताशनमुपस्थाय "शीतो भव हनूमतः" इति प्राञ्जलिः प्रार्थयत ॥ ग. २२ ॥

अथ दह्यमानायां लङ्कायां—अथ यथार्हं सैन्याधिपान् संमान्य मारुतिस्तैरनुयुक्तः स्ववृत्तान्तमखिलमाख्यातवान् ॥ ग. २३ ॥

आनीतचूडामणिसंनिधानादाविः प्रमोदेन रघूद्वहेन ।
तत्रानुयुक्तः पवनात्मजन्मा विज्ञापयामास कृतप्रणामः ॥ २१ ॥

लङ्कापुरोपवनसीम्न्यथ राजपुत्री
मालोकयं निशिचरीगणबाध्यमानाम् ।
केनापि पातकवशेन सुपर्णलोके
बन्दीकृतामिव भुजंगमराजकन्याम् ॥ २२ ॥

देव्यास्त्वदीयान्वयकीर्तनेन त्वन्मुद्रया च व्यपनीय शोकम् ।
वार्तामभिज्ञानमयीमियाचं प्रस्थातुकामः परिपूर्णकामः ॥ २३ ॥

ब्रह्मास्त्रवित्रस्तजयन्तकल्पां कथामभिज्ञाप्य वने प्रवृत्ताम् ।
चिरं रुदत्या जनकेन्द्रपुत्र्या चूडामणिः प्रेषित एष तुभ्यम् ॥ २४ ॥

किं बहुना—

देव तस्याः प्रतिष्ठासूनसूनाशैकपालितान् ।
मुद्रयित्वा प्रपन्नोऽहं तवाभिज्ञानमुद्रया ॥ २५ ॥

इति श्री विदर्भराजविरचिते चम्पुरामायणे सुन्दरकाण्डे
सारसंग्रहः समाप्तः ।

हरिः ॐ

452-53 PRINTED AT THE BANGALORE PRESS, BANGALORE CITY, BY C. VASUDEVA RAO, SUPERINTENDENT.